श्री·भा क्तयाश्रवणेनवा सर्वभूतसमत्वेनसंतुष्टोमितभुक्पुमान् ३ स्थलस्थेनयथाभासोजलस्थः
र· तृ· प्रतिबुध्यते जलस्थेनतथासूर्योदिविस्थःप्रतिभातिच ४ भूतादिभिरहंकारःस्वाभासैर्लक्ष्यतेय
३५ दा सदाभासेनतेनैवलक्ष्यतेसत्यदृक्पुमान् ५॥ देवहूतिरुवाच॥ प्रकृतिःपुरुषेनैवमुच्यतेन्यो
न्यधर्मतः अकर्तुःकर्मबंधोस्तिसर्वंयुक्तंवदस्वमाम् ६॥ कपिलउवाच॥ अनिमित्तेनधर्मेणभक्त्या
चमतितीव्रया ज्ञानेनतत्त्वदृष्टेनप्रकृतिःपुरुषस्यहृ ७ तिरोभवित्रीशनकैर्महदिमिस्वेस्थितस्य
च एवंप्राप्नोतिमांधीरोयद्गत्वानविवर्तते ८॥ इतिश्रीभागवतरहस्येतृतीयस्कंधेसप्तविंशोध्या
यः॥२७॥ कपिलउवाच॥ योगस्यलक्षणंवक्ष्येत्वांयेनात्माप्रयातिसत्पथम् धर्मसेवापरधर्मत्यागः
संतोषश्चार्जवम् १ ग्राम्येभ्योनिवृत्तिर्मोक्षेच्छामितमेध्याशनंतथा अहिंसाब्रह्मचर्यंचमौनंप्राणज
यःशनैः २ हरिलीलापरिध्यानंमनसाप्राणधारणम् एतैर्मार्गैर्मनोदुष्टंबुद्ध्याशुजीतमानवः
३ शुचौदेशेप्रतिष्ठाप्यस्थिरमासनमभ्यसेत् चिरकालेनविरजंमनःस्याद्योगिनःसदा ४ यदा
सुविरजंचित्तंध्यायेन्नारायणंतदा श्रीवत्सवक्षसंदेवंप्रसन्नकमललोचनम् ५ ध्यायेद्देवंनर
ऽणिगांतारूपेवयोस्मिस्थितम् चिंतलव्यपदंतत्रयुंज्यादंगोहरेर्मुनिः ६ यच्छौचनिःसृतंतोयं
ध्यानस्थितमलापहं जानुद्वयंहरिध्यायेदूरूद्वावपिसुंदरौ ७ नाभिह्रदंतथावक्षःकंठंकौस्तु
भसंयुतम् हरेःसंचिंतयेद्बाहून्शंखचक्रादिसंयुतान् ८ कौमोदकींहरेर्मालांकंठस्थांमणि
मेवच संचिंतयेन्मुखंतस्यमंदहासंश्रीनिकेतनम् ९ दृष्टिंहासंचसंध्यायेद्भूमंडलमथापिवा॥
एवंभक्त्याहरौमातश्चित्तशुद्धिःप्रजायते १० नमसोपुरुषःसाक्षंप्रपंचंबुद्धिमोन्वरः काष्ठाद्वदा
हकोभिन्नोलक्ष्यतेजीवसंज्ञितात् ११ प्रधानाच्चतथाद्रष्टाभगवान्ब्रह्मसंज्ञितः ॥१२॥ इतिश्री॥
भागवतरहस्येतृतीयस्कंधेअष्टाविंशोध्यायः॥ २८॥ देवहूतिरुवाच॥

तीष्टुः शरदः शतम् ९ विधायनवधावीर्यंतस्यामाधत्तकर्दमः सर्वाःस्त्रियोभवंस्तासांहस्ताकन्यासुवा
वसा १० त्वयाविमृग्यःपतयोमुक्तिमार्गंचमेवद ११ इतिश्रीभागवतरहस्येतृतीयस्कंधेत्रयोविंशोध्यायः २३
मैत्रेयउवाच देवहूतिंमुनिःप्राहकृत्वाभिव्याहृतंस्मरन् कर्दमउवाच माशुचोराजपुत्रीत्वंहरिर्गर्भंग
मिष्यति १ श्रुत्वादिनाभजन्त्वंतच्छेत्स्यतिसंशयांस्तव मैत्रेयउवाच सादेवहूतिःकान्तेदंकृत्वास्यमभ
जद्धरिम् २ काले ततःसभगवान्जज्ञेग्निरिवदारुणि उत्सवावहवोभूवन्ब्रह्मातत्रसमाययौ ३ ज्ञा
त्वानारायणंकृत्वाकर्दमंचेदमब्रवीत् श्रीब्रह्मोवाच त्वयैवमेकृताप्रजावाक्यंयज्जगृहेभवान् ४
ऋषिभ्योदेहिकन्यास्त्वंविस्तृणोहियशोभुवि वेदाहंकपिलंदेवमवतीर्णंस्वमायया ५ मैत्रेयउवाच ॥
तावाश्वासगतोधाताकुमारैःसहनारदः इतिकन्याविश्वस्तस्मैमरीच्यादिभ्यएवसः ६ ऋषयस्तेकृ
तोद्वाहाःप्रययुःस्वस्वमाश्रमम् आत्तायकर्दमःपुत्रंहरिंद्रूपमभाषत ७ नगरण्याप्रार्थमेप्राहेज्ञातो
सिनन्दनः स्वीयंवाक्यमृतंकर्तुंत्वत्तामिशरणंतव ८ श्रीभगवानुवाच यदुक्तंमेकृतंसत्यंजन्मने
वि॰ तत्त्वदर्शनम् नष्टयमेसप्रव्यातुंहिदेहंमयाभृतम् ९ गच्छकामंमृतिंजित्वामत्कर्येभजनामहं मा
त्रेविद्यावदिष्यामियमामुक्तिंगमिष्यति १० मैत्रेयउवाच कर्दमश्चोदितस्तेनवनेचोपविवेशह योगाभ्या
सपरोभूत्वानिःसंगोव्यचरद्ध्रुवम् ११ इतिश्रीभागवतरहस्येतृतीयस्कंधेचतुर्विंशोध्यायः ॥
२४ ॥ श्रीरामकृष्णगोपालहरिः ॥ ॥ ॥

शौनकउवाच ॥ स्वयंनारायणोजातस्तत्त्वज्ञानायनृणाम् यानिकर्माणिकृतवांस्तानिमेकथ
यप्रभो १ सूतउवाच मैत्रेयोविदुरंप्राहस्वान्वीक्षिकयाप्रचोदितः मैत्रेयउवाच वनंगतेस्वपितः
रिकपिलोन्ववसत्तदा २ आसीनंबिंदुसरसिदेवहूतिरुवाचह देवहूतिरुवाच ध्यानास्मिविष
यासक्तामपन्नांघंतमःप्रभो ३ सत्त्वलग्नंप्रनालंध्यस्वसूर्यइवोदितः त्वंहरीकुरुमेमोहंतवा ॥

१ लक्षणं महदादीनां सत्त्वं पुंसश्च वदप्रभो यथोक्तं सांख्यशास्त्रेषु विरागो येन जायते १ लोकस्यास्तान सुम सचो ८१
३३ पायाऽऽविरासित्विह मैत्रेय उवाच इति मातुर्वचः श्रुत्वाऽऽवभाषे करुणार्दितः २ कपिल उवाच ॥
बहुधा भक्तियोगोऽस्ति नराणां गुणमार्गतः संकल्प्य विनेहिंसादीन् मम भक्तः सतामसः ३ विषया-
न्मानसिक्कत्वा पूजयेन्मां स राजसः मदर्पणं कर्म कृत्वा यजेन्मां स सात्विकः ४ लक्षणं भुक्तियोग-
स्य मयि भक्तिरहैतुकी मम पूजादियोगेन जीवचित्तं सुनिर्मलम् ५ भवामि सर्वभूतेषु तत्र मां पश्यते न
रः सेवेशो जीवो ह्यजीवेभ्यो ह्यपादेभ्यश्च पादवान् ६ तत्रापि च द्विपात्स्रेष्ठो द्विपादेषु तथा द्विजः ततोप्य-
तस्ततोऽसंगीततो मय्यर्पितात्मवान् ७ एकोस्मि सर्वभूतेषु प्रणमेन्मनसा हरिं उक्तो मया भक्तियोगो-
नरः स्यात् येन मुक्तिभाक् ८ यस्माल्लसर्वं माक्रम्य सविसृत्तो मम मुक्तिकृत् यद्भयाद्वर्ततेदेवः सूर्यस्त-
द्विपद्भयात् ९ इति श्रीभागवतरहस्ये तृतीयस्कंधे एकोनत्रिंशोऽध्यायः ॥२९॥
कपिल उवाच बलेतस्य न जानाति काल्यमानोऽपि मानवः सुखायव्यायत्यक्त्वा तिधुनोति तत्स्वयं हरिः
अल्पध्रुवं च देहादि ध्रुवं देहादिमन्यते जंतुर्गच्छति यां योनिं तत्रैव मनुते सुखम् १ आत्मजायादि
पात्तोल्यात्मानं बहु मन्यते तेषां पोषणदुःखेन दुरितानि करोति सः २ स्त्रीणां समापयाद्दीनः कुट-
धर्मगृहे स्थितः पुलसर्वीनधर्मेणु शोषपुष्णात्यथः प्रमान् ४ धनेन ष्टे च निःसत्वः परार्थी कुरु-
ते स्पृहाम् स्वभरणाक्षमं दृष्ट्वा नेच्छंति पितरं सुताः ५ आसुरं तं नरं दृष्ट्वा यमदूतौ समागतो दृष्ट्वा-
हृतौ शकृन्मूत्रं च विमुंचति भयार्दितः ६ नानादुःखभुग्नश्चैवं यमदूतैश्च ताडितः तामिस्रादिनरोभुंक्ते
नारीवासंग निर्मितम् ७ अत्रैव नरकः स्वर्गो यातनाश्चापि लक्षिताः ८ इति श्रीभागवतरहस्ये तृती-
यस्कंधे त्रिंशोऽध्यायः ॥३०॥ श्रीरामकृष्णायनमो नमः ॥ ॥
कपिल उवाच स्त्रियः प्रविष्ट उदरं जंतुः स्वेनैव कर्मणा षड्भिर्मासैरेधमानः शेते विण्मूत्रयोस्तु ॥

श्री·भा· म् ॥ भूमिं मत्स्य जलेन साम्यं सत्वं च रूपारसः ॥४॥ श्रीभगवानुवाच ॥ वनस्थिता वयं सत्यं मृगयेनाटशान् शुनः ॥
३· त· निघ्नामहे क्रयासाम: संस्थाप्यास्मान् शुचो मृज ॥५॥ मैत्रेय उवाच ॥ एवं तिरस्कृतो दैत्यो गदयाभ्यहनद्धरिम् ॥ स्वं वे ॥
३· चयन्नरावेगं हरिस्तस्यान्वपद्यत ॥६॥ जिगीषतोर्द्वयोरेवं बहुकालो व्यभून्मृधः ॥ अलायधीतयोर्द्रष्टुं ब्रह्मा च मुनि ॥
भिः सह ॥७॥ दृष्ट्वा दैत्यं वत्स कीर्तं ब्रह्माह सूकरं विभुम् ॥ ब्रह्मोवाच ॥ दैत्योऽयं भयदो नित्यं प्रजानां जहि माचिरम् ॥ ८
हत्वा दैत्यमृषीन्देवांल्लोकानायेहि शर्म तत् ॥ इति श्रीभागवतरहस्ये तृतीयस्कन्धेऽष्टादशोऽध्यायः ॥१८॥
मैत्रेय उवाच ॥ हरिः क्रुद्धो वज्रो धातुर्जघान गदया रिपुम् ॥१॥ ताडिता दैत्यगदया च्युता भगवतः करात् ॥ हरेर्ग
दा हृता भूमौ दैत्यस्तं नाहनत्तदा ॥२॥ हरिः सस्मार स्वं चक्रं दृष्ट्वान्यानं निरायुधम् ॥ व्यय चक्रं हरेर्दृष्ट्वा मृतो भीत्या
हनद्धरिम् ॥३॥ विलुर्यदामाह रत्नं शाहमांस्त्वं जिगीषसि ॥ न एवं स्वपौरुषे दैत्यास्त्रिशूलं जगृहे पुनः ॥४॥ त्रिशू
लं तुः स्वरं दृष्ट्वा तच्चक्रेणाछिनद्धरिः ॥ मुष्टिना हृत्यसहरिमुरसं तस्थौ यत ॥५॥ ततोऽसृजत् भगवति मायामल
यहूपिताम् ॥ दृष्ट्वा स बहुधां मायां चक्रं शार्ङ्गं च वल्लभम् ॥६॥ दितिर्मनसि कंपो भूत्स्मरं त्वाश्च पतेर्वचः ॥ माया
नाशं ततो दृष्ट्वा मुष्टिभिः सोऽहनद्धरिम् ॥७॥ ताडितो हरिहस्ताभ्याम पतद्गिरिराडिव ॥ ब्रह्मादयो मृतं दृष्ट्वा शशं
सुः केगतां मृतिम् ॥८॥ पालक्ष्यादितिपुत्रेण पार्षदौ द्वौ महात्मनः ॥ शापाद सद्गतिं प्राप्तौ पुनः स्थानं गमिष्यतः ॥ ९
देवा ऊचुः ॥ नमस्ते देवदेवेश नमस्ते धरणीधर ॥ मैत्रेय उवाच ॥ हरिरेवं हिरण्याक्षं हत्वा स्वं लोकमागतः ॥ सूत
उवाच ॥ आनंदं लब्धवान्क्षत्ता श्रुत्वा कर्म हरेः प्रियम् ॥ इति श्रीभागवतरहस्ये तृतीयस्कंधे एकोनविंशोऽध्यायः ॥१९॥
शौनक उवाच ॥ सौते महीमनुः प्राप्य किं द्वाराणि चकार सः ॥१॥ शुसामीश्वर लीलानां निगमाय वदस्व नः ॥ क्षत्ता किं
पृष्टवान्भूयो मैत्रेयं तीर्थसेवया ॥२॥ निर्मलस्तु कृशावर्तं आसीनं तत्त्वविन्मनम् ॥ सूत उवाच ॥ हरेरुद्धरणं भूमे
र्लीलां श्रुत्वाह भारतः ॥३॥ विदुर उवाच ॥ सृष्ट्वा प्रजापतीन् ब्रह्मा किमारभत ब्रूहि माम् ॥ मरीच्याद्या मनुर्वैकु
ण्ठो विश्वं ममाभावयन् ॥४॥ मैत्रेय उवाच ॥ नाभेर्भूत्वा हरेर्धाता नामिस्त्राद्यसृजत्तदा ॥ ततोऽसृजन्मोहरूपे काये

फलं भुक्त्वा ममांतिकमितांश्च नः ॥४॥ श्रीब्रह्मोवाच ॥ कस्तस्य कथनं कृत्वा प्रोचुः प्रांजलयो विभुम् ॥ ऋषय
ऊचुः ॥ चिकीर्षितं न नस्ते विद्मो यद्दीनत्वं प्रभाषसे ॥५॥ आत्मणोनात्वमात्मास्थिथ मः संरक्षते नया ॥ श्रीभगवानु·
वाच ॥ प्राप्स्यतो गतिं सद्य एतौ मामेव माप्स्यतः ॥६॥ श्रीब्रह्मोवाच ॥ एवं दृष्ट्वा हरिं विप्राः परिक्रम्य प्रयुक्त·
तः ॥ हरिस्तावनुज्ञाप्याह गच्छतं ब्रह्मलोहेलनात् ॥७॥ इत्युक्त्वा भगवान्धिष्ण्यं सश्रीयाजुष्टं समाविशत् ॥ हाहाका
रो महानासीत्तयोर्हि पतमानयोः ॥८॥ तौहि प्राप्तौ दितेर्गर्भं मितितेजस्तयोर्द्वयोः ॥ येन सर्वं कंपिताः स्म भग
वान्दृशं विधास्यति ॥९॥ इति श्रीभागवतरहस्ये तृतीयस्कंधे षोडशोऽध्यायः ॥१६॥
मैत्रेय उवाच ॥ श्रुत्वेदं कारणं सर्वं न्यवर्तंत दिवौकसः ॥ दितिः शतं वर्षशते यमौ प्रसुषुवे सुतौ ॥१॥ उत्पातास्त
त्र बहवो निमित्तं लयकारिणः ॥ दिशानां ज्वलनं जातं मन्येपि बहवो भवन् ॥२॥ प्रजा दृष्ट्वा महोत्पातान्मेनिरे वि
श्वसंप्लवम् ॥ ववृधाते तदा दैत्यौ सहसा भयदाविति ॥३॥ दिवस्पृशौ शिरोभ्यां च कंपयंतौ पदैर्भुवम् ॥ पिता·
तयोर्नाम चक्रे कश्यपस्तु यथाविधि ॥४॥ योजायत स्वदेहात्प्राक् हिरण्यकशिपुं विदुः ॥ दितिर्यं प्रथमो सूत·
हिरण्याक्षं विदुः प्रजाः ॥५॥ हिरण्यकशिपुश्चक्रे वशे लोकान्सपालकान् ॥ हिरण्याक्षो दिवं यातो युयुत्सुर्मृ·
गयन्रणम् ॥६॥ देवावीक्ष्य हिरण्याक्षं गदापाणिं निलिल्यिरे ॥ देवाँल्लीनान्हि दृष्ट्वा संज्ञानू समवनदद्भृशम् ८
समुद्रं संगतस्तत्र वै दृष्ट्वा मीनाः प्रदुद्रुवुः ॥ वरुणस्य पुरीं प्राप्य ... तमब्रवीत् ॥९॥ मैत्रेय उवाच ॥ वरुणो
विमलब्ध्वा स्तुतेनेनं प्रत्यभाषत ॥ कस्त्वया हि महावीर युद्धं तेस्य करिष्यति ॥१०॥ इति श्रीभागवतरहस्ये तृतीय·
स्कंधे सप्तदशोऽध्यायः ॥१७॥ श्रीरामसहायताकरे ॥
मैत्रेय उवाच ॥ दैत्यो जलेशकथनं श्रुत्वा गच्छद्रसातलम् ॥ अदितो नारदेनैव तत्रापश्यद्धरिं प्रभुम् ॥१॥ ततः क्रु·
रु महीं मुंच लीलया स्तूतराहृते ॥ वनगोचरमालिंग्य उराथ मृगणीभव ॥२॥ यत्नं हं ससुरांस्त्वा हि संस्थाप्य प्र·
सृजेप्सुवः ॥ मैत्रेय उवाच ॥ कस्सोऽरुक्रविद्धश्च निरगाज्जलमध्यतः ॥ हिरण्यकेशः प्रोवाच निर्जन्त्वानां न स्वहित·

श्री· भा· तोमनुः प्राह कर्दमं शान्तविग्रहं ॥ मनुरुवाच ॥ ब्रह्मासृजन्मुखाद्युष्मान्वेदानात्मपरीक्षया ॥१॥ सवाहुभ्यो ५४
३· तृ· सृजद्वास्मान्त्राणायैव केवलम् ॥ सर्वे मे संशयाः छिन्नाः यमेयत्कथितं त्वया ॥२॥ दीनस्य शृणु मे वा
२२ क्यं त्राविंनं कृपया मुने ॥ पतिमिच्छति कन्येयं मम सद्युक्तं गुणादिभिः ॥३॥ सद्दर्शनान्नारदाच्छ्रुत्वा ऽऽगत्यातो
त्वं गृहाण प्रभो ॥ इत्युक्तोसि विवाहार्थं ददामित्वं ममात्मजम् ॥४॥ कर्दम उवाच ॥ सत्यमुद्वो ढुकामोहं द
याः स्याहैदिकोविधिः ॥ अनिच्छामः मयेयं साध्वी यावद्गर्भो न जायते ॥५॥ मैत्रेय उवाच ॥ इति श्रुत्वा मनुर्नेकी
क्यं ददौ तस्मै स्वकन्यकाम् ॥ आलिंग्य कन्यां प्रहृदन्मनुर्गत्विमनोरथौ ॥६॥ स स्त्रीकस्तेऽपश्यदाश्रमा
न्नृषिसंततान् ॥ उत्तस्थुरृषयः सर्वे दृष्ट्वायांतं प्रजापतिम् ॥७॥ रोमाणिणान्कुशा यत्र यज्ञस्य स ताप्री
णतः ॥ नाम्ना वर्हिष्मती यत्र भवनं तापनाशनम् ॥८॥ सवेश्या बुभुजे कामान्पुण्यान्नामेकसप्ततिम् ॥
यादी रामानसाः क्लेशानवाप्यंते हरिप्रियम् ॥९॥ मनोश्चरित्रं ते प्रोक्तं तदपत्योदयः स्मृतः ॥१०॥ इति श्री
भागवते तृतीयस्कंधे द्वाविंशोध्यायः ॥२२॥ मैत्रेय उवाच ॥ पतिं पर्यचरत्पत्नी स्वापित्रोर्गमने कृते ॥
कालेन सुष्ठुवदनाप्रेम्णा तां कर्दमोब्रवीत् ॥१॥ तुष्टोहं तव भार्येयं भोगान्भुंक्ष्व गतव्यथा ॥ मैत्रेय उवा
च ॥ इतिश्रुत्वा प्रमालदागतामिस्मभाषत ॥२॥ देवहूतिरुवाच ॥ यन्मेवदसियादंतत्तं मां गर्भवतीं कु
पं·१३ पोथं रु देहं भाग्याहे चतापनाशनं ॥ इतिश्रुत्वा प्रियावाक्यं विमानं कामगं तदा ॥३॥ प्रकटं कारयामास स
र्वोपस्करसंयुतम् ॥ पश्यंतीं तं हृदि दृष्ट्वा प्रोवाच कर्दमस्ततां म ॥४॥ कर्दम उवाच ॥ स्नात्वा त्वं शुल्कनी ॥
र्थेस्मिन्विमानमिदमारुह ॥ सा भर्तृवाक्यमादाय जले तस्मिन्विवेश ह ॥५॥ शतानि दश कन्यानां किशो
रीणां ददर्श सा ॥ दृष्ट्वा तामुत्थिताः प्रोचुर्वयं दास्यः स्म कन्यकाः ॥६॥ स्नापयित्वा ददुस्तस्यै वस्त्रादीनि
मुद्रमदाः ॥ पतिं स्मृत्वागता सा स्त्री यत्रास्ते कर्दमः स्वयम् ॥७॥ आरोह्य स्वविमाने तां दृष्ट्वा कांतां हरिप्रियाम्
वनेषु सुमतीर्थेषु सरोमेरमयात्तया ॥८॥ दर्शयित्वा भुवो गोलं स्वाश्रमायन्यवर्तत तयोर्विमाने रमतोर्व

विदुर उवाच॥ स्वायंभुवः किं च कार पत्नी शप्य वदस्व मा मम्॥ इति ब्रुवाणं विदुरं प्राह कौषारवो मुनिः॥१॥ 
पत्न्या सह मनुर्भूत्वा वेदगर्भमभाषत॥ त्वमेकः जन्महृद्भूतोऽसि मे कर्म विधेहि मां॥२॥ यशो येन भवेदत्र प
रत्र च गतिर्भवेत्॥ श्रीब्रह्मोवाच॥ सन्तुष्टस्त्वच मे तात पुत्रोऽसि त्वं मनुष्ठ हंस्यसि॥४॥ उत्तानुत्ताश्रयं भूमिं गो
शाधि ग्रहणं यज॥ मनुरुवाच॥ अहं तवाज्ञां गृह्णामि स्थानं देहि कुरु द्विने॥५॥ मैत्रेय उवाच॥ भूमिं हृष्ट्वा ज
ले मग्नामिति दध्यौ चिराच्चिरम्॥ विसृष्ट्यां तु नासिकाभ्यां वराहो निर्गतस्तदा॥६॥ क्षणेन वर्धमानं तं हृष्ट्वा ब्र
ह्माव्यतर्कयत्॥ इति मीमांसतस्तस्य जगर्ज भगवान् हरिः॥७॥ तस्य तद्गर्जनं श्रुत्वा जनलोकादिवासिनः॥
अस्तुवंस्तं स्तुतिं श्रुत्वा वराहो जलमाविशत्॥८॥ भूमेः पदं विचिन्वानः समुद्रेणान्तः स्वयम्॥ आनयित्वा
न्तलाद्भूमिं ततो दैत्यं जघान ह॥९॥ ब्रह्माद्यास्तुष्टुवुः सर्वे सूकराय नमोऽस्तु ते॥ मैत्रेय उवाच॥ उपायनं मेने
भूमिं तुतो ब्रह्मादिभिर्नृप॥१०॥ जले च लीलया न्यस्य हरिर्भूमिं ततो ययौ॥ इति श्री भागवतरहस्ये तृतीय
स्कंधे त्रयोदशोऽध्यायः॥१३॥ श्रीरामजी सहाय हो॥

श्रीशुक उवाच॥ सूकरस्य कथां श्रुत्वा विदुरः पृष्टवान् मुनिः॥१॥ विदुर उवाच॥ सूकरस्यादिदैत्यस्य कस्माद्धे
तोरभून्मृधः॥ मैत्रेय उवाच॥ हरेः कथान्तया पृष्टा यया गच्छेद्ध्रुवो गतिम्॥२॥ श्रावयामीति हा संते वल लण
त्वया श्रीतत्परा॥ अपत्यकामा च दितिश्चकमे कश्यपं पतिम्॥३॥ पूजयित्वा हरिं सायमग्न्यागारे स्थितं जगौ॥
दितिरुवाच॥ दुनोति मां मे यका मस्त्र मापि कुर्वनुग्रहम्॥४॥ कं वृणीत वरं वत्साः पिता नः पर्यपृच्छत॥
तासैवमाव मस्माकं दर्शनेऽसत्त्रयोदश॥५॥ मैत्रेय उवाच॥ इति ब्रुवाणां तां पत्नीं कश्यपोऽप्याह दीनवत्॥
पूर्यतां निरं तिजनानुहर्त्तं प्रतिपालय॥६॥ संध्यायां घोररूपायां भीवश्चरति भूतराट्॥ मैत्रेय उवाच॥ दि·
तिर्भर्तुरिदं श्रुत्वा जग्राह वसनेन तं॥७॥ न त्वेष वरा परहासि मैथुनं सत्त्वया करोत्॥ सा दितिर्व्रीडिता तेन·
पतिं लज्जाप्यभाषत॥८॥ दितिरुवाच॥ रुद्रो वधीन्न मे गर्भं यथा सा करवं महत्सम्॥ ससंध्या नियमान्कृत्वा·

ममम् ॥ प्रजाः सृज यथापूर्वं मय्यात्तमनुशेरते च ताः ॥ ५ ॥ मैत्रेय उवाच ॥ कथयित्वा विधातारं हरिरंतर्दधे स्वय-
म् ॥ इति श्रीभागवतरहस्ये तृतीयस्कंधे नवमोऽध्यायः ॥ ९ ॥
विदुर उवाच ॥ अंतर्हिते हरौ ब्रह्मा प्रजाश्च कतिधासृजत् ॥ १ ॥ यद्यत्पृष्टं मया त्वत्तस्तन्मां वद तत्त्वतः ॥ सूत उ-
वाच ॥ एवं संचोदितः प्रश्नान्प्राह कौषारवो मुनिः ॥ मैत्रेय उवाच ॥ चकार हरिणोक्तो ब्रह्मा वर्षशतं तपः
जलं पद्मं कंपितं च वायुना स ददर्श ह ॥ ३ ॥ तपःप्रभावसंवृद्धोऽन्यपाद्वायुं सहांभसा ॥ त्रिलोकाकमलं लोका-
न्विस्तृतामीन्यचिंतयत् ॥ ४ ॥ चकार पद्ममाविश्य विश्वसृक्च यथा तदा ॥ विदुर उवाच ॥ कालाख्यं लक्षणं ब्रूहि
कालस्याद्भुतकर्मणः ॥ ५ ॥ मैत्रेय उवाच ॥ कालं कारणमात्मानं विष्णुरव्यक्तमसृजत्स्वयम् ॥ मायया संस्थितं वि-
श्वं नास्ति भिन्नं हरेर्न तु ॥ ६ ॥ सर्गश्च नवधा योऽसौ कालकर्मगुणैस्त्रिधा ॥ विश्वस्य प्रलयः प्रोक्तो नवधा च सर्गा-
न्शृणु ॥ ७ ॥ आद्यो भूम्महतः सर्गो द्वितीयस्त्वहमस्तथा ॥ तृतीयस्तु भूतसर्गश्चतुर्थ ऐंद्रियः स्मृतः ॥ ८ ॥ पंच
मो देवसर्गश्च षष्ठस्तु तमसस्तथा ॥ षडिमे प्राकृताः प्रोक्ता वैकृतान्शृणु ॥ ९ ॥ तस्य षोडशहृदयः सर्गः सप्त-
मः कथितस्तथा ॥ तिरश्चामष्टमः सर्गः सोऽष्टाविंशतिभेदवान् ॥ १० ॥ अर्वाक्स्रोतस्तु नवमः क्षतैरेकविधः स्मृतः
अष्टधा देवसर्गश्च शृणु मन्वंतराणि च ॥ ११ ॥ तदंशांश्च महाप्राज्ञ कथयामि तवाग्रतः ॥ इति श्रीभागवतरहस्ये
तृतीयस्कंधे दशमोऽध्यायः ॥ १० ॥ राम ॥ श्रीरामाय नमः ॥
मैत्रेय उवाच ॥ भूम्यादीनां विशेषांत्यः परमाणुरिति स्मृतः ॥ १ ॥ सतः कार्यस्य कैवल्यं स च स्थूलो निरंतरः ॥
परमाणुभोगी सूक्ष्मः कालोऽस्ति सर्वभुग्महान् ॥ २ ॥ त्रसरेणुस्त्रिकं भुंक्ते त्रुटिनामा प्रकीर्तितः ॥ शतभागीस
वेधस्तैस्त्रिभिरेव लवः स्मृतः ॥ ३ ॥ लवत्रयं निमेषः स्यात्तैस्त्रयः क्षण एव च ॥ काष्ठा भवेत्क्षणाः पंच लघुता द-
श पंच च ॥ ४ ॥ नाडी तास्त्रयः पंचैव द्वे मुहूर्तः प्रकीर्तितः ॥ षट्यामो सौ च यामास्तु मर्त्यानामहनी उभे ॥ ५ ॥ पक्षः
पंचदशाहानि द्वयोर्मासः प्रकीर्तितः ॥ द्वाहत्तस्य षड् अयनमयने वत्सरः स्मृतः ॥ ६ ॥ कालत्रयसमस्तवत्सरजां·

अंटिका

पत्नीमाह प्रजापतिः ॥९॥ मौहूर्तिकाद्दिरोषेणादौ पुत्रौ क्रूरशीलिनौ ॥ दुःखदौ बलिनौ पतिपीनां गौन भविष्य-
नः ॥१०॥ यदि तौ दास्यतोऽदुःखं प्रजानां चेतदीश्वरः ॥ लोके वर्तीयं भगवांस्तव पुत्रौ हनिष्यति ॥११॥ दितिरुवा-
च ॥ पुत्रयोर्वधमाशासे हरिणात्मना हते ॥ कश्यप उवाच ॥ भगवद्भक्तिमानेकस्तव पौत्रो भविष्यति स-
पत्युः सकाशाच्छ्रुत्वेदं सर्वं सा मुमुदे तदा ॥ इति श्रीभागवतरहस्ये तृतीयस्कंधे चतुर्दशोऽध्यायः ॥१४॥
मैत्रेय उवाच ॥ दधार वर्षाणि शतं दितिर्वीर्यं तु काश्यपम् ॥१॥ तमो दृष्ट्वा लोकपाला ब्रह्मणे तमवेदयन्-
लोकपाला ऊचुः ॥ तमः प्रवृत्तं कुतो वेत्थ सर्वे भीता वयं प्रभो ॥ मैत्रेय उवाच ॥२॥ प्रहस्य भीतांस्तान्दृष्ट्वा ब्रह्मोवा-
च प्रजापतिः ॥ ब्रह्मोवाच ॥ सनकाद्या भवज्ज्येष्ठाश्चेरुर्वैकुंठमेकदा ॥३॥ यत्र सर्वे जनाः संति वैकुंठे हरिमू-
र्तयः ॥ सर्वे संपन्नसंसर्गा वनं श्रीरूपिणीव तु ॥४॥ अतीत्य षट्कक्षान्तान्ते सप्तमायां गतास्तदा ॥ तत्रापश्य-
न्स्थितौ देवौ सर्वभूषणभूषितौ ॥५॥ तावदृष्ट्वा निर्विविशुर्द्वारि ते मुनयस्तदा ॥ वेत्रेणावारितास्ताभ्यामूचुस्ते
दुःखिता इव ॥६॥ मुनय ऊचुः ॥ सत्त्वधौ युवयोरेव केयं विषमशीलता ॥ हरिलोकः प्रवेष्टव्यः कैश्चित्केषां च-
वारणम् ॥७॥ नारायणांतरं नास्ति भयं चोदरभेदिकम् ॥ अतो यो गच्छतु लोकं न भवेद्बुद्धिरीदृशी ॥८॥ प-
तित्वा पादयोस्तेषां प्रार्थनां चक्रतुस्तदा ॥ कृपया दीयते दंडो न भवेद्धेलनं पुनः ॥९॥ श्रुत्वापराधं भगवान्स्वा-
नीतत्राययौ स्वयम् ॥ आगतं ते हरिं दृष्ट्वा प्रणेमुर्जगदीश्वरम् ॥१०॥ कुमारा ऊचुः ॥ पापिनां हृदये नास्ते त्वां-
विदाम वयं प्रभो ॥ मुक्तिं नेच्छंति ते धीराः स्वदंत्रि शरणं गताः ॥११॥ तत्र ते स्मृतिरेवास्तु यत्रास्माकं भवेद्भ्रमः
इति श्रीभागवतरहस्ये तृतीयस्कंधे पंचदशोऽध्यायः ॥१५॥
श्रीशुक उवाच ॥ इदं जगाद श्रीकांतः सोऽस्मत्तानुमतिं न यच्च ॥१॥ श्रीभगवानुवाच ॥ ममैतौ पार्षदौ विप्राजयो-
विजय एव च ॥ एताभ्यां न हतं नाम प्रज्ञा भवतां तन्महेल्लनम् ॥२॥ भवद्भिर्योधृतो दंडः स एवास्ति मतो मम ॥
ब्राह्मणा मम नु पाद्यस्तद्वेणुर्मूर्ध्नि रोपतः ॥३॥ ये द्विषंति द्विजान्क्रूरास्ते सर्वे नाकभागिनः ॥ भवद्भ्याप-

११पं· धीराश्चात्मनो। भेदं न पश्यंति भवप्र· युक्तं भवंतु युवाभ्यां· मेवभगवतिकासि· तमान्वैः॥—

णामण्णमयोत्तजः ॥ ततोभूतसूक्ष्मवन्हाष्टिर्महत्तत्वक्रमेणवै ॥ ९ ॥ भिन्नाः सर्वैः स्तुवन्विस्मुमहदाद्याश्चमानि 
नः ॥ देवाऊचुः ॥ नमामदेवतेपादाशणदछायाश्चितावयम् ॥ १० ॥ व्रजेमशरणंसर्वेतवपादसरोरुहम् ॥ न·
वामृतकणापानेहत्वागच्छतितेपदम् ॥ ११ ॥ त्वयाहृष्टाविसृष्टाः स्मयदर्थंतन्नशक्नुमः ॥ किंकरवामतेदेव
देवत्वंतुत्ताहपांकुरु ॥ १२ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेपंचमोध्यायः ॥ ५ ॥
श्रीशुकउवाच ॥ इतितुद्धागतिंतासांतत्रणाशाविष्णुहरिः ॥ भिन्नंसयोजयामासतंगणंकर्मबोधयन् ॥ १ ॥
गणोस्तयुक्तोजनयन्मात्राभिस्त्रविराडनन्तुम् ॥ विशतांशेनतुत्वाभयन्योन्यसंगणोस्तदा ॥ २ ॥ बहुकालमु·
वासाप्सुपुरुषः सहिरण्मयः ॥ विवभाजात्मनात्मानमेकधादशधात्रिधा ॥ ३ ॥ साध्यात्मस्त्रिविधाप्राणोद·
शधाचैकधाहृदा ॥ ततः स्थानानिदेवानांमुखादीन्यभवन्हरेः ॥ ४ ॥ शीर्षस्यद्योधरापद्भ्यांखंनाभेरुदपद्यत·
सत्वेनैवदिवंदेवामनुष्यास्तत्रथारम् ॥ पेदिरेतमसानाभिरुद्रायाः पार्षदाहरेः ॥ मुखादिभ्योभवंस्तस्यब्राह्म
णाद्याः कुरुद्वह ॥ ६ ॥ एतद्रूपंभगवतोदैवकर्मात्मरूपिणः ॥ वर्णितंतुक्तः समर्थोस्तिवर्णयामियथाक्र·
तम् ॥ ७ ॥ सेयंभगवतोमायामायिनामपिमोहिनी ॥ ब्रह्मात्ममार्गेयोवेदयतस्तस्मैनमोनमः ॥ ८ ॥ इतिश्रीभा
गवतेमहापुराणेतृतीयस्कंधेषष्ठोध्यायः ॥ ६ ॥
श्रीशुकउवाच ॥ वदंतमेवमैत्रेयंविदुरः पृष्टवांस्तु नः ॥ भगवतश्चिन्मात्रस्यगुणस्यगुणाःकथम् ॥ १ ॥ यो
हृजंमायया विश्वंस्थापयत्यतिवैस्वयं ॥ देशादेरविलुमात्मासगुण्येनाजयाकथम् ॥ २ ॥ नियंतश्चहरेर्देवक्लेशा
दिश्चकुतोभवत् ॥ संशयोमेमहान्प्राप्तकामायेतिपराणुद ॥ ३ ॥ श्रीशुकउवाच ॥ दत्तैवंवेरितः प्राहमाया·
लक्षणमुत्तमम् ॥ पदाविरुद्ध्यतेमायातदामुक्तस्वबंधनम् ॥ ४ ॥ विनार्थंयत्प्रतीयेतस्वशिरःछेदनंनिशि·
जलेचंद्रस्यकंपादिः सैवमायाप्रकीर्तिता ॥ ५ ॥ हरिभक्तयाशमंयातिमायात्वेवशास्त्रदाश्रया ॥ विदुरउवाच ॥
हरंगतः संशयोमेमाययाहरिबंधनम् ॥ ६ ॥ सृष्ट्वाग्रेमहदादीनिविराजंप्राविशद्विभुः ॥ त्र्यंत्वयेरितोद्य·

कालकर्म
स्वभावस
क्रिमतः=

नर्कैगा·

श्री·भा· स्ये तृतीयस्कंधे तृतीयोध्यायः ॥३॥ उद्धव उवाच ॥ संध्याकालेऽभवन्नेषां निधनं मंदचेतसां ॥१॥ भगवांस्तद ४८
र· तृ· भिप्रेत्य हृत्तमूलमुपाविशत् ॥ कृष्ण एकः स्थितो द्रष्टुमेकं दत्त हरिं तदा ॥२॥ श्यामं चतुर्भुजं शांतं योगिहृद्ये·
२२ णा संस्थितम् ॥ आगतस्तत्र मैत्रेयो मामुवाच हरिस्तदा ॥३॥ श्रीकृष्ण उवाच ॥ वेदाहं तव हार्दं यद्ददामि यत्न वे·
ष्टितं ॥ एतन्ने चरमं जन्म रहः पश्यसि मायतः ॥ ज्ञानं भागवतं नाम यो क्तं ब्रह्मणे पुरा ॥४॥ नतो दास्याम्य·
हं साधो प्रीतोहं तव भक्तितः ॥ कृष्णं प्राहोद्धवस्तत्र किं विन्नेच्छाम्यहं प्रभो ॥६॥ अनीहस्य तु यत्कर्म जनस्य
जनं नतथा ॥ तुदति चित्तमेतन्मे मंत्रेष्ठ यन्निमंत्रणाम् ॥७॥ यदुक्तानं ब्रह्मणे प्रोक्तं तन्नहृतोऽत्तमावयम्
यन्नरेमवयं दुःखं भूयः कथयनः प्रभो ॥८॥ कृत्वात्मनः स्थितिं तस्मादागतोहमिहातुरः ॥ सोहं गमिष्ये
दयितं वदर्याश्रममंडलम् ॥ श्रीशुक उवाच ॥ सुहृदो कदनं श्रुत्वा चोद्धवं विदुरोब्रवीत् ॥ कृष्णोयदाहत्तानं ते
तत्वं मां वद सुव्रत ॥९॥ उद्धव उवाच ॥ मैत्रेयस्ते वाकर्णं व्याख्यानं ते कथयिष्यति ॥ विदुरोप्युद्धवाच्छ्रुत्वा कृष्ण·
कर्माणि सर्वशः ॥११॥ रुरोद विकलोभूत्वा गते कृष्णे जनार्दने ॥ इति श्रीभागवते रहस्ये तृतीयस्कंधे चतु
र्थोध्यायः ॥४॥
श्रीशुक उवाच ॥ गंगातीरे स्थितं तत्र मैत्रेयं पर्यपृच्छत ॥१॥ विदुर उवाच ॥ सुखाय कुर्वते कर्म जनो दुःखं
भजन्ति च ॥ दुःखस्तु विकर्षं प्रोक्तं तन्नो वद सविस्तरम् ॥२॥ तन्मार्गं वद मां देव येनशंसा भवेद्गतिः ॥ करोति
यानि कर्माणि यथेदं सृजति प्रभुः ॥३॥ यथा शेते तु लयं कृत्वा यथासीद्ब्रह्म था हरिः ॥ अवीक्ष्य पत्न्लोकानां प्र·
जानां च भिदां यथा ॥४॥ वेदव्यासमुखात्सर्वं श्रुतं कृष्णस्य कथामृते ॥ उवाच भारतं व्यासो यस्मिन्नजीवरतिर्भ·
वेत् ॥५॥ हरेः कथासु यत्सारं समुद्धृत्य वद स्वमां ॥ श्रीशुक उवाच ॥ तच्छ्रुत्वा प्रष्टो ग्रमैत्रेयो विदुरं प्रत्युवाच ह ॥ ९
मैत्रेय उवाच ॥ साधु पृष्टं त्वया तात बादरायणवीर्यज ॥ हरेस्त्वं सम्मतो नित्यं योयत्तेत्तान मादिशत् ॥७॥ अथ
ते भगवल्लीलावर्णयाम्यानुपूर्वशः ॥ भगवानेक एवासीन्माया सदसदात्मिका ॥८॥ मायायां वीर्यमाधत्त गु·

श्री·भा· कथयस्व व्रत ॥९॥ इति श्रीभागवतरहस्ये तृतीयस्कंधे प्रथमोध्यायः ॥१॥
र· स्कं· श्रीशुक उवाच ॥ एवं पृष्टः स तेनोद्धवस्तत्रैनोत्सेहे किंचिन्नृप ॥ मौनं कृत्वा मुहूर्तं च विदुरं प्रति प्रोक्तवान ॥१॥ उद्ध- २।
२१ व उवाच ॥ अस्तंगते कृष्णसूर्ये मृतानां किं वदामि ते ॥ कुशलं ते तु दुष्टानां हतलोकोस्ति दुर्भगः ॥२॥ यत्से-
वु संतो न विदुर्यादवा इति तत्त्वसौ ॥ मद्रूपं विवृताद्याय लोकानंतरधात्स्वयम् ॥३॥ नृलीलया पद्महीतं यत्से-
लोकस्य मोहनं ॥ दृष्ट्वा विलोको मनुते पानू कौशलमित्युत ॥४॥ दृष्ट्वावतस्तु यं कृष्णं गच्छंतं तं तु ब्रजस्त्रियः ॥
वसुदेवगृहे जन्म कृष्णस्य मम दुःखदम् ॥५॥ उद्धे कृष्णस्य स्वदेहत्याके वित्यादु मेहहृतिम् ॥ उग्रसेनस्यैकं कृ-
कार्यं स ततानायाश्च सहृत्तिः ॥६॥ एतन्मे खेदयच्चित्तं श्रीकृष्णस्य महात्मनः ॥ वसुदेवगृहे जातो गतः कंसेन बाध-
ने ॥७॥ ततो वसन्नंदगेहे एकादश समास्तदा ॥ चारयन् गोधनं गोपैः गोष्ठे शरीरमत् ॥८॥ मातुःपिता भोज-
राजेन महितानु लीलयाहनत् ॥ विषपानमृतान्गोपान्गाश्चाजीवयत्तदा ॥९॥ अपाजपद्मोपराजेरेमेक-
लपदेजगौ ॥ इति श्रीभागवतरहस्ये तृतीयस्कंधे द्वितीयोध्यायः ॥२॥
उद्धव उवाच ॥ आगत्य मथुरां कृष्णो लोकरीत्या सवधादिकम् ॥१॥ गुरोरथीत्य सत्स्वमतं तनसेद दीसुतम् ॥
उवाह रुक्मिणीं तत्र कृष्णो नाग्निजितीं तथा ॥२॥ धनिस्म पार्थिनः कृष्णो राज्यपोज्ञायदत्तवान् ॥ तदंनः उग्रसे
विश्वतेन सर्वा हृतः स्त्रियः ॥ तासां मुहूर्त एकस्मिन् करान् जग्राह मायया ॥ तास्वेकैकस्या दश दश पुत्रान ॥
जीजनत् ॥ अमीच्चनन्तकालादीनवधीच्च बरादिकान् ॥ भ्रतेड यीध नु दृष्ट्वा कृष्णस्तत्रैवाचिंतयत ॥५॥ न-
गतो भूमिभारोयं भीष्मद्रोणार्जुनैः स्वतः ॥ यदास्तैवै मद्यपानेकरिष्यंति मिथस्तदा ॥६॥ मुसाहुर्नितते त्रा-
णां वधस्तेषां भविष्यति ॥ राज्ये युधिष्ठिरं स्थाप्य नरपामास बांधवान् ॥ कामान्निषेवे द्वावन्या रमयत्वितरां-
यहन् ॥ एवं बहुगते काले विरागः समजायत ॥८॥ कदाचिन्मुनयः शोभः कोपिता यदुबालकैः ॥ उर्यात-
तस्य मध्यः प्रभासं मुलिकादयः ॥९॥ कृतं तेविविधं दानं स्नानं तर्पणपूर्वकम् ॥ इति श्रीभागवतरह-

श्री·भा मांनुद्विभूतीर्वेदस्तनः॥७॥ यथाब्रह्माचकारेदंसर्गोमन्वादिसंयुतम्॥ तेषांसंस्थाःप्रमाणंवदमेविस्तरा· ८८
३·तृ· द्विभो॥८॥ वर्णाश्रमविभागांश्चऋषीणांजन्मकर्मच॥ यज्ञादीनांवितानादिधर्मादीनांचलक्षणम्॥९॥ य
२४ नोत्थानंमवेशुःसाभक्तिर्वैराग्यमेवच॥ मामुक्तानुक्रमस्ताणांसुत्तरंवदविस्तरम्॥१०॥ इतिश्रीभागवते·
रहस्येतृतीयस्कंधेसप्तमोध्यायः॥७॥ शुभमस्तुसर्वजगताम्॥
मैत्रेयउवाच॥ धन्योस्मिहरुर्वंशोयंयस्मिंस्त्वंहरिभक्तिमान्॥ प्रवर्तयेभागवतंयदाहभगवान्मुनीन्॥१॥
मुनिपसेन· यदन्वपृच्छन्मुनयोदेवंसंकर्षणंविभुं॥ तेनप्रोक्तंकुमारायतेनसांख्यायनायच॥२॥ पराशरायसोप्याह·
समहर्षेप्रोक्तवानिदं॥ सोहंतेकथयाम्यद्यश्रूयतांविदुरप्रिय॥३॥ यदासुप्तापश्रीहरिस्तदाविश्वलयोभव·
तू॥ चतुर्युगसहस्रांतेदेहेहलीनंददर्शसः॥४॥ सूक्ष्मोर्योभूत्नाभिदेशात्पद्मकोशस्वरूपवान्॥ लोकप·
द्मेविशाद्धिसृत्तनोवेदमयःस्वयंभूः॥५॥ तत्रस्थितोपश्यमानोलोकंलेभेसुरवानिसः॥ कमलस्थितमा
त्मानंनवेदभ्रांतिमागतः॥६॥ जलेविविन्वतस्तस्यनालेकालोमहानभूत्॥ तत्रपद्मेपुनःस्थित्वाबहुकाले·
नयोगकृत्॥ जितेंद्रियाणांधाताचापश्यत्स्वसौविभुंहृदि॥ यथामेचतुर्भुजंदेवंसर्वलक्षणसंयुतम्॥८॥
तत्रदृष्ट्वाहरिंपश्चात्पद्मक्षमलादिकम्॥ प्रजाःसिसृक्षतस्तोत्रस्तहरिमीडेसदाच्युतं॥९॥ इतिश्रीभागव
तरहस्येतृतीयस्कंधेअष्टमोध्यायः॥८॥ शुभम्॥
श्रीब्रह्मोवाच॥ मयाज्ञातोसित्वंहरिःसावतारोरुगृहीतवान्॥ नातःपरंप्रपश्यामिस्वरूपंचनमोस्तुते॥१॥ च
रणाम्बुजगंधंतेयेजिघ्रंतिनरोत्तमाः॥ तेषांकालभयंनास्तिलोभादिष्वकुतोभवत्॥२॥ मैत्रेयउवाच॥ विर
णमहर्षिस्तुस्वातमाहभगवान्हरिः॥ श्रीभगवानुवाच॥ वेदगर्भकुरुस्रष्टिंदुःखंमनसिमावह॥३॥ प्रार्थि·
तंतेमयादत्तंभूयोपित्वंतपस्तप॥ सिसृक्षतःप्रजावृद्धीःनान्याद्दुःखंगमिष्यति॥४॥ ज्ञातोहंभवतानुभ्य·
मान्यामेदर्शितोवहिः॥ त्वयास्तुतस्तेप्रीतोहंलोकानुग्रहकाम्यया॥५॥ सर्गादिनाचसिद्धयत्नस्थिंडंभक्तितो

श्री·भा· णं पृष्टवान्स्वयम् ॥१२॥ ब्रह्मा भागवतं प्राह सोपि व्यासाय प्रोक्तवान् ॥ इति श्रीभागवतरहस्ये द्वितीयस्कंधे नवमो- ।१
२·स्कं· ध्यायः ॥९॥ श्रीशुक उवाच ॥ सर्गविसर्गस्थानानि पालनं तु तयस्तथा ॥१॥ मन्वंतरेशगाथाश्च निरोधो मुक्तिराश्र-
७९ यः ॥ भूतादिजन्मसर्गः स्याद्विसर्गः ब्रह्मणः स्मृतः ॥२॥ वैकुंठविजयः स्थानं पालनं तदनुग्रहः ॥ मन्वंतराणि स-
द्धर्म ऊतयः कर्मवासनाः ॥३॥ हर्यवतारचरितं पुंसामीशकथास्तथा ॥ निरोधो विष्णुशयनं स्थितिर्मुक्तिः
स्वरूपतः ॥४॥ सृष्टिस्थितिप्रलयो यस्मादाश्रयः स स्मृतस्तथा ॥ अंडं भित्वा वहिर्यातः स्थितयेऽपो ससर्ज प्रभुः ॥ ५
शुद्धज्ञानात्तमात्मानं वीर्यं सत्वसृजत्क्रिया ॥ अपि दैवादिभेदेन तत्सन्नान्नसर्वमपीहसः ॥६॥ प्राणेन क्षिपमाणस्तनू-
डंतरा जायते प्रभोः ॥ यदेच्छा भक्षणादीनां जायते परमात्मनः ॥७॥ अधिष्ठानादिवक्तानां मुखादीनां समुद्भवः ॥
स्थूलं रूपं भगवत उक्तं सूक्ष्मं ततः परम् ॥८॥ पंडितानां च सूक्ष्मेति स्थूलसूक्ष्मे विशेषतः ॥ सनामादिक्रियाय त्रै-
वस्तनीक मेकः परः ॥९॥ देवान्पितृगणान्सिद्धान्किन्नरान्सुरस्तथा ॥ मनुष्यान्नरान्पिशाचादीन्कूष्मांडादीन्ग्र-
हान् पि ॥१०॥ द्विधा चतुर्विधा सर्वे जलस्थलनभौकसः ॥ कुशलाकुशला मिश्राः कर्मणां गतयः स्मृताः ॥११॥
एको गुणो यदा ह्यन्यानीस्यते व्यसृजत्तदा ॥ इदं विश्वं पाति रूपः पुष्णाति विश्वरूपधृक् ॥१२॥ सर्वं विश्वं शिवो-
भूत्वा कालरूपो निगच्छति ॥ ब्रह्मकल्पो विकल्पश्च कथितः संग्रहेण च ॥१३॥ कालस्य परिमाणं तु कथयिष्या-
मि ते न्वहम् ॥ शौनक उवाच ॥ सूत मैत्रेयो योऽवदो जायते कुत्र नो वद ॥ सूत उवाच परश्च परीक्षितो वाच यज्ज्ञुका-
स्तद्दाम्यहम् ॥१४॥ इति श्रीभागवतरहस्ये द्वितीयस्कंधे दशमोध्यायः ॥ शुभम् ॥ ८८ ॥

चैत्रशुक्ल १२ सं१९२२

समाप्तोयं द्वितीयस्कंधः ॥ शुभमस्तु सर्वजगताम् · लिखितं तुलसीरामेन ॥ श्रीहरिसर्पणमस्तु ॥ श्रीरामजी·

सप्तादिपरिणामदेवादिभावभिन्नं तां केन कर्मणाकर्म
कृतेन कोदेवादिरूपं प्राप्नोति ॥३ यत्तुपद्गता ॥१

श्री॰भा॰ दिष्टुविष्टो भक्तानां धुनोति शमलं हरिः ॥२॥ यस्यासीदुदरात्पद्मं लोकानां स्थितिलक्षणम् ॥ येन ब्रह्मा प-
२॰द्वि॰ द्विश्वदृष्टं येन तद्वद ॥३॥ कुत्र संस्थावयवैर्लोकाः लोकैरवयवाहरेः ॥ यथा कल्पो विकल्पश्च यत्प्रमाणं प्रती-
१९ यते ॥४॥ यथा कालगतिः क्रमेण तपो याह क्रपीयहिज ॥ यस्मिन्कर्मसमवायः भूपातालादिसंभवः ॥५॥ प्र-
माणमंडकोशस्य महतां चरितं तथा ॥ वर्णाश्रमविभागश्च ह्यवतारकृतं हरेः ॥६॥ युगमानं युगधर्म
धर्मः साधारणो नृणाम् ॥ तत्त्वानां परिसंख्यानं योगसाधनपोविधिः ॥७॥ योगेश्वरगतिर्याच वेदादीनां गति
स्तथा ॥ संप्लवस्थितिलयानां यागतिश्चेष्टहर्तयोः ॥८॥ योविधिस्त्रिवर्गस्य सर्गश्चैवानुशायिनाम् ॥ सर्वा
ण्युक्तान्यनुक्तानि तत्त्वतो वद विस्तरात् ॥९॥ सूत उवाच ॥ शुको भागवतं नाम कथयामास तं नृपम् ॥ इति
श्रीभागवतरहस्ये द्वितीयस्कंधेऽष्टमोऽध्यायः ॥८॥
श्रीशुक उवाच ॥ मायामृते भगवतो न किंचित्परिदृश्यते ॥१॥ बहुरूपस्त्वाभाति जलेषु प्रतिबिंबवत् ॥ ब्र-
ह्मात्वधिसमास्थाय सृष्टिं देहे न चास्मृयात् ॥२॥ एकदा चिंतयंल्लोकान् येन परं तनु चास्मृणोत् ॥ नापश्यंस्तच्चु-
र्वं ब्रह्मा तपसि मनश्चादधौ ॥३॥ बहुवर्षं तपोनष्टभगवद्दर्शनोत्सुकः ॥ दर्शयामास भगवान्स्वलोकं ब्रह्म-
णे तदा ॥४॥ न संति यत्र कालाद्याः सर्वे तत्र चतुर्भुजाः ॥ ददर्श श्रीपतिं तत्र सवैश्वर्यादिभिर्युतम् ॥५॥ नना-
मतं दृष्ट्वा ब्रह्मा ब्रह्माणं भगवान्नजगौ ॥ श्रीभगवानुवाच ॥ त्वयाहं तोषितो ब्रह्मन्वरं वरय सुव्रत ॥६॥ ममे-
च्छया तपस्तप्तं त्वया मे हृदयं तपः ॥ श्रीब्रह्मोवाच ॥ सर्वज्ञोसि महाप्राज्ञ सर्वस्यावस्थितो गुहाम् ॥ यथाजा-
नामि ते रूपे स्थूलसूक्ष्मे हृपांकुरु ॥ यथाकरोमि सर्गादि देहि बुद्धिं तथा मम ॥८॥ न च मेप्यभिमानः स्याद्धिव-
कर्तेति संततके ॥ श्रीभगवानुवाच ॥ ज्ञानं गृहाणमाहं यावान् तावानंतर्भविष्यति ॥९॥ त्रिकालेप्यहमेवास्मि मा-
यायास्त्वगुणांश्शृणु ॥ असत्येभाति यत्सत्तं सत्येऽसत्यं च भाति यत् ॥१०॥ तद्रूपं मायावतां नर्वायुण्यामायया तमः
वसामि सर्वभूतेषु तस्मात्त्वमिदमस्तु ते ॥११॥ इत्युक्त्वांतर्हितः प्रदर्श्य ब्रह्मा लाविश्वं ससर्ज ह ॥ इति द्विविधि ...

तेनैव यज्ञभारेणायजमीश्वरमव्ययम्॥९॥ मदन्वन्येऽयजन्सर्वे मन्वाद्याः पितरोसुराः॥ एतत्ते कथितं ।८
तात यथा त्वमनुपृच्छसि॥१०॥ यतोहं तं न जानामि न देवा न भवादयः॥ यः सृजत्यति पातीदं तस्मै भगवते
नमः॥११॥ सर्वं द्रव्यादिकं स्यान्नु च विष्णुर्नास्मदादयः॥ यत्किंचिद्दृश्यते लोके तत्तत्त्वं परमात्मनः॥१२॥
इति श्रीभागवतरहस्ये द्वितीयस्कंधे षष्ठोध्यायः॥६॥
श्रीब्रह्मोवाच॥ भूहारोद्धृत्यनाशाय क्रतः सूकररूपिणा॥ लोकानां दुःखनाशाय यज्ञो जातो रुचेस्तया १
स्वमातृरूपदेशाय कपिलो जज्ञिवात्मवान्॥ यावितोत्रेरपत्यत्वं दत्तात्रेयोथ जन्मवान्॥२॥ आत्मतत्त्वस्य बोध्य
र्थं कुमारोभूच्चतुःसनः॥ नरनारायणौ जातौ मूर्तेस्तापसशीलिनौ॥३॥ विष्णुर्विमात्रा तपसे वनानि गतवान्ध्रु
वः॥ उत्थाने तज्जगद्दृष्ट्वा वेनसूनुरभूत्पृथुः॥४॥ नाभेर्ऋषभदेवोभूत् योगचर्यां चचार सः॥ मखयत्ते हय·
ग्रीवो मत्स्योभूद्धरणीमयः॥५॥ देवासुरस्तु पायासै कूर्मोभूद्गिरिधारणे॥ हिरण्यकशिपोर्हंत्यै नृसिंहोभू·
त्करालहृत्॥६॥ सरसि ग्राहनाशाय हरिसंज्ञोप्यजायत॥ बलेर्भूमिग्रहणाय वामनोभूत्स्वयं ततः॥७॥
तत्त्वज्ञानोपदेशाय हंसोभूज्जगदीश्वरः॥ मन्वंतरमनोर्वंशो भूत्वाडष्टेदमव्ययात्॥८॥ धन्वंतरिश्च लोका
नां रुजो हंति स्वयं तदा॥ यमसंस्थापनार्थाय जामदग्न्योप्यभूत्स्वयम्॥९॥ रावणादिवधार्थाय रामोभू·
त्कलयास्तया॥ सर्वदुःखनिहत्यर्थं कृष्णोभूद्देवकीसुतः॥१०॥ राज्ञां बुद्धिमोहार्थं बुद्धोभूदुपयन्भवा·
न्॥ कलौ दुष्टान्नरान्हत्वा कल्किस्तत्र भविष्यति॥११॥ सर्गेहं पालने विष्णुरंते शंभुः सदाभवत्॥ नकोपि·
विष्णुवीर्याणि जानाति तस्य कर्म च॥१२॥ जानंति भक्त्या तत्कासंत्वादृश्या अस्मदादयः॥ यथा हरौ भवेद्भक्ति
र्नृणां संकल्प्य वर्णय॥१३॥ श्रीमद्भागवतं ग्रंथं विष्णोः प्रीतिकरं परम्॥ इति श्रीभागवतरहस्ये द्वितीयस्कं·
धे सप्तमोध्यायः॥७॥ ⁓ ॥ ⁓ ॥ ⁓ ॥ ⁓ राम
राजोवाच॥ नारदो ब्रह्मणस्तस्मिन्यो यस्मै प्राह वदस्व मां॥१॥ मनःप्रवेशपाहं कस्ये देहं त्यक्त्वा द्विजाधिप॥ ह




ॐ श्रीगणेशाय नमः ॥ श्रीगुरुचरणकमलेभ्यो नमः ॥ एतद्वै पृष्टवान्क्षत्ता मैत्रेयं वनमाविशन् ॥ राजोवाच ॥
क्षत्तुर्मैत्रेययोर्वीरो यदाभूद्ददतुर्व्रतः ॥१॥ श्रीशुक उवाच ॥ धृतराष्ट्रः सुतान्पुष्णन्भ्रातृपुत्रान्ददाह सः
लाक्षागृहे ज्ञानशत्रून्नीचो दाहाय पंचपाचतः ॥२॥ यदा न मेने ह्यस्यस्य कथ्यं नो विदुरस्तदा ॥ गृहात्प्रविश्य मंत्रा
र्थे हितो यत्तदावदत् ॥३॥ त्यज दुर्योधनं राजन्नात्मदुःखप्रशांतये ॥ ततो दुर्योधनः प्राह वहिर्गच्छ कुलाध
म ॥४॥ तेन निर्भर्त्सितो गच्छन्हस्तिनापुरतस्तदा ॥ चचार सर्वतीर्थानि भारते संतति यानि सः ॥५॥ कृत्वा नाशं कौ
रवाणां प्रभासे गतवांस्ततः ॥ सरस्वतीतीर्थरूपा यत्र तीर्थानि सर्वशः ॥६॥ ततश्चोपेत्य यमुनामुद्धवं सदद
र्श ह ॥ आलिंग्य गाढं स्वानां चापृच्छदुद्धवं गतश्रमः ॥७॥ आसते कुशलं सर्वे यदुभोजांधकादयः ॥ कृष्णप्रसु
न्नाः पांडवाः धर्मपुत्रादयस्तथा ॥८॥ न मेने दुःखनाशार्थं हि हत्यामच्च मद्युतः ॥ तस्मान्न स्पृहं कथ सर्ववार्तां·

निश्चलात्मेंद्रियाशयम् =

श्री·भा· १· द्वा· २८१

मागतः १३ ततो निरस्तः सवहिस्तस्य श्वासेन चोदरात् लयाब्धौ न्यपतद्विप्रो जलजीवैश्च पूरिते ॥ ५८१
१४ तत्रैव पुटके बालं पश्यान्नैवीक्ष्य स द्विजाः परिष्वक्तुं समारेभे ततश्चांतर्दधे हरिः १५ हरेरनुवट॥
स्तोयं संप्लवश्च ततो द्विजाः मार्कंडेयो मुनिस्तत्र पूर्ववत्स्वाश्रमे स्थितः १६ ॥ इति श्रीभागवते म
हापुराणे द्वादशस्कंधे नवमोऽध्यायः ॥ ९ ॥ ❖ ❖ ❖ ॥
सूत उवाच ऋषिस्तन्मायिकं दृष्ट्वा तमेव शरणं ययौ ऋषिरुवाच तव पादौ प्रपन्नोऽस्मि यन्मायया
मोहिता जनाः १ सूत उवाच शंकरः पर्यटन्भूमिं भवान्या तं ददर्श ह दृष्ट्वा महर्षिं शिवं प्राह पश्य वि-
प्रं तपस्विनं २ देहि त्वं मुनये सिद्धिं भक्तानां सिद्धिदो भवान् शिव उवाच नेच्छत्ययं प्रिये किंचिद्दा॥
ज्ञं मोक्षादिकं तथा ३ हरिभक्तिं यतः प्राप्तः संवदिष्यामनेन च सूत उवाच तदाश्रमं शिवो गच्छ-
दितुमन्काप्रियया सह ४ समाधिस्थो न वेदोमा शिवं विश्वं मुनिस्तदा शिवो विशत्स हृदयं ज्वलन्मा-
लादिभूषितः ५ स दृष्ट्वात्मगतं रुद्रं विस्मितः किमिदं ब्रुवन् नेत्रे निमील्य रुद्रादीन् दृष्ट्वा शंभुमथा-
नमत् ६ ततस्तमर्चयामास गणैः पार्वतीयुतं स्वागतासनपाद्यार्घ्यैराह किं करवाम ते ७ आत्मा-
त्मनापूर्णकामस्य येनेदं निर्मितं जगत् नमः शिवाय शांताय घोराय च नमोऽस्तु वै ८ सूत उवाच ॥
तेनार्चितः स्तुतः शंभुरिदमाह सतां गतिः शिव उवाच वरं वरय भो विप्र वरदेशा वयं त्रयः ९ येषां
दर्शनमात्रेण मर्त्या यद्विंदतेऽमृतं ब्राह्मणाः साधवः शांता अस्मात्समदर्शिनः १० भक्ता भेदं
न पश्यंति मय्यजे च हरौ तथा नमस्यामो वयं विप्रानेतस्मद्रूपं त्रयीमयं ११ विधूतात्मसमाधानेन त-
पःस्वाध्यायसंयमैः विप्राणां दर्शनादिभ्यः शुद्ध्यंत्यंत्यजादयः १२ सूत उवाच इति रुद्रवचः श्रु-
त्वा भ्रामितो विष्णुमायया रुद्रवाचामृतध्वस्तकल्मषः शिवमब्रवीत् १३ ऋषिरुवाच तव च ॥
श्रीशर्वभावानां कर्त्तारं गिरीशिणा यः सृष्ट्वेदमनुपास्य तस्मै भगवते नमः १४ कं वृणे वै वरं त्वत्तः

पुंभिर्देहस्थ्यनिहितः १९ कालादयो न स्पृशंति ये जनास्त्वामुपासते तवपादाब्जं तेनं नान्यं विमो
हितोऽन्यत् १७ ब्रह्मापि यस्मान्नेपादं भजाम्यन्यन्निरस्यभो ब्रह्मादिरुद्रविष्णुसत्त्वकथमालौविमोम
मुने १८ विश्वस्य हेतुः सत्त्वादिः सत्त्वमूर्तिश्च शांतये नान्ययाभ्यां भयंमोहोक्षसत्तं न जायते न्वशांतिः १९
सत्त्वं भजंति ते मूर्तिं सात्वताः परमर्षयः नमो भगवते भूम्ने विश्वरूपधरायच २० नारायणाऋषये
हंसनरोत्तमनमोऽस्तुते यंनवेदब्रह्ममतुहितंमार्गैर्नमोऽस्तुते ॥ २१ ॥ इतिश्रीभागवतरहस्ये
द्वादशस्कंधेऽष्टमोऽध्यायः ॥ ८ ॥ ❖ ❖ ❖ ॥

सूतउवाच नारायणस्तमाह्वेदं मार्कंडेयेन संस्तुतः नारायणउवाच ब्रह्मर्षिवर्यसिद्धोऽसि भ
क्त्यामेतपआदिभिः १ मत्तो वरं प्रतीच्छत्वं वरदेशादभीप्सितं ऋषिरुवाच अनेनालं वरं मन्ये यद्भ
वानत्तगोचरः २ अथापि मायां ते द्रष्टुमिच्छाम्यखिलमोहिनीं इतीडितस्तेन हरिर्वेदयांश्रममा
गमत् ३ मायादर्शनमन्विच्छन्निवसन्नाश्रमे मुनिः अम्यर्कादौ हरिं ध्यायन्नावदद्वैरघं जयु
त् ४ क्वचित्पूजां विसस्मार भक्तिप्रसरसंप्लुतः तस्यैकदा नदीतीरे स्थितस्याब्रह्मणोत्तमाः ५ सं
ध्याकाले महावातः सहसाहाशु स्थतदद्भुतं द्विजाः अतस्थूलास्थमगुरुचवर्षधाराबलाहकाः ६ समुद्रैः प्ला
वितां भूमिं मुनिर्दृष्ट्वा समत्रसत् जलेन मज्जितं विश्वं दृष्ट्वा वभ्राम सद्द्विजः ७ एकोवशिष्टःतत्रदु
भ्योंपरीतश्चजडोऽभवत् अमंस्तमस्यपारे व्योमसनक्राद्यैश्च पीडितः ८ दिशो न वेद गांखं च परिश्र
मसुपागतः क्वचित्सुखी क्वचिद्दुःखी क्वचिन्मृत्युमुपागतः ९ यातो युर्लक्षवर्षाणि भ्रमतो मोहिता
त्मनः वटपाले ततो पश्यद्दृगकर्ज्जाद्विसद्द्विजाः १० वटस्येशानशाखायां वटपत्रपुटे शिशुं शयानं दह
योऽपश्यामं ग्रसंतं सम्पयातमः ११ स्मितस्वरूपं पाणिभ्यां पुन्नोपचरणं मुखे हस्ताधयं तंतं दृष्ट्वा विस्मि
तः सत्त्वमायया १२ स्वासेनाऽऽस्य विशन् प्रविष्टो दृष्टवाऽखिलं आकाशादि ततो दृष्ट्वा स्वं वन्मोहम

विसुमाययेति =

श्री·भा· द्वा·स्कं· १८७ दादौ व्यतिरेकान्वयौ द्विजाः यस्मात्तो ब्रह्म तत्संज्ञं जीववृत्तिष्वपाश्रयः २५ अष्टादशपुराणानां नामानि १८८
शृणुत द्विजाः ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं च गारुडं २६ नारदीयं भागवतं वाह्निकं स्कान्दमेव च भविष्यं ब्र
ह्मवैवर्तं मार्कण्डेयं च वामनं २७ मात्स्यं कौर्मं च वाराहं ब्रह्माण्डाख्यमिति त्रिषट् ॥ इतिश्रीभागवते
द्वादशस्कन्धे सप्तमोऽध्यायः ७ ॥ ❖ ❖ ❖ ॥
शौनक उवाच मृकण्डुजं जनाः सूत ऋषिमाहुश्चिरायुषं यः कल्पान्तेऽवशिष्टो भूद्येन ग्रस्तमिदं जग
अ॰ ८ त् १ स वा चास्मत्कुलोत्पन्नो लयः कोऽपि न जायते हन्तात्मन्यस्य विश्वस्य लयं चोदमपीयत २ वटप
त्रपुटे स स्वयं पश्यद्बालवद्विभुं सूत उवाच हन्तो लोकहितः प्रश्नो नारायणयशस्मृतिर्यतः ३ प्राप्तद्विजाति
संस्कारान्मार्कण्डेयोऽर्चयन्हरिं अग्न्यर्कगुरुविप्रेषु चात्मनि धर्मे हृदये ४ दृढव्रतधरः शान्तोऽधीत्य वे
दान्महामनाः सायं प्रातः समाहृत्य भैक्षं स गुरवे ददौ ५ बुभुजे तदनुज्ञातो वाग्यतो गुरुभक्तिकृत् ए
वं तपःस्वाध्यायार्थी वर्षाणामयुतायुतं ६ आराध्य हृषीकेशं जिग्ये मृत्युं सुदुर्जयं ब्रह्मा भृगुर्भवो विस्मि
तास्त्रासन्दृष्ट्वा तस्य तपःफलं ७ इत्थं मुनिर्हरिं दध्यौ तस्य योगं च युञ्जतः तदा कालो ऽतीयाय मन्व
न्तरषडात्मकः ८ शक्रस्तस्य तपो दृष्ट्वा ऽत्रेभीतस्य विनाशनं गन्धर्वकामवाय्वादीन्प्रेषयामास तेन तद्वा
९ तदाश्रमं ययुः सर्वे पुष्पभद्रासरित्तटे तटं तरङ्गतो वायुर्ववौ तत्र भयं स्मरं १० उद्यच्चन्द्रनिशावक्त्रा
स्तत्रासीत्स समाकरः हुत्वाग्नीन्समुपासीने ददृशुरिन्द्रकिङ्कराः ११ गन्धर्वकामवाय्वाद्या नशेकत्से
विमोहितुं हृष्योद्यमानिवहन्नविन्द्रस्याञ्चचरास्ततः १२ कामं निलेजसं दृष्ट्वा शक्रो विस्मयमागतः
तस्यैवं युञ्जतश्छिन्नं तपःस्वाध्यायसंयमैः १३ अनुग्रहायाविरासीन्नरनारायणो मुनेः शुक्लकलो
सतौ दृष्ट्वा वनमालाविभूषितौ १४ ननाम दण्डवद्भूमौ न सेहे तावुदीरितम् पूजाद्यैः पूजितौ तौ
स मुनिरिदमब्रवीत् १५ मार्कण्डेय उवाच नवाकिं वर्णये देव येनेदं जीव्यतेऽखिलं इमे नौमि त्रिलोकेषु

श्री·भा· १२·

भोत्वद्दर्शनात्परं वरमेकं वृणोथापि यतो भक्तिर्भवेद्द्विज २५ सूतउवाच मुनिनाभिष्टुतोरुद्रस्तस्मा १८·
दामाभिवेदित: श्रीरुद्रस्तेतवभाव:स्यादजरामरतातथा २६ आकल्पंचयशोज्ञानेपुराणाचार्यता
२८० पिते सूतउवाच मुनयेसवरान्दत्वारुद्रोगात्कथयन्नुमां २७ पुरातुभूतचैतन्यत्वमालादिभूषित:
विचरत्यधुनाविप्रश्चिरंजीवश्रुतानवान् २८ ॥ इतिश्रीभागवतरहसेद्वादशस्कंधेदशमोध्याय:
१० ॥ ❖ ॥ शौनकउवाच अथार्थवदंमांविमतंत्रमंत्रार्थविद्वान् उपासनायांकलस्य
सतांत्रिकाश्रिय:पते: १ अंगोपांगायुधाकल्पंकल्पयंतियथैवयै: तन्नोस्त्वन्नु:समाचक्ष्वयेन
मर्त्योमृतोभवेत् २ सूतउवाच गुरून्नत्वाहरे:सर्वाविभूती:कथयामिते मायाद्यै:सविकारोस्मा
त्तत्वैस्तुनवभिर्द्विज ३ भू:पादौद्यौ:शिरोनाभिर्नभ:सूर्योक्षिणीतथा नासेवायुर्दिश:कर्णौमे॰
ढ्रंतस्यप्रजापति: ४ पायुर्मृत्युरीशिवस्वलोकपालास्तुबाहव: भ्रुवौयमोमनश्चंद्रोलज्जालोभौ
तथाधरौ ५ स्मयोभ्रमोरंताज्योत्स्नातस्यरोमाणिभूरुहा: मेघा:केशा:कौस्तुभ श्चस्वात्मज्यो
तिश्चतत्प्रभा ६ श्रीवत्संतस्यतन्मायावनमालाप्रकीर्तिता वास:छंदोमयंतस्यब्रह्मसूत्रंत्रिवृत्
स्वरं ७ कुंडलेसांख्ययोगौचमौलिर्ब्रह्मपदंतथा प्रधानमासनंतस्यसत्वंपद्ममिहोच्यते ८ ओज:
सहोबलायाश्चतस्यभृत्यागदादय: नभस्तत्वादिभिर्विष्वक्शंखादीनिमहात्मन: ९ तथैवेंद्रियली
लोचं गीतादीनिहृतानिच नंदादयोष्टौतद्दास्यामणिमाद्याहरेर्गुणा: १० वासुदेवादिकंस्व॰
मूर्तिव्यूहोभिधीयते अंगोपांगायुधाकल्पै:सविश्वादिचतुष्टयं ११ हरिर्धत्तेचरूपभोक्तायो॰
नि:स्वयंप्रभात् य:स्मरत्यन्निपातीदंस्मरत्वातंमुक्तिमाप्नुयात् १२ शौनकउवाच प्रतिमासंग॰
णोसौरंसप्तकंश्चकथाहृयत् तेषांनामानिकर्माणिसंयुक्तानामधीश्वरै: १३ ब्रूहिन:श्रद्दधा॰
नानांव्यूहंसूर्यात्मनोहरे: सूतउवाच विस्तारविषयासूर्यंआत्मन:सर्वदेहिनां १४ रविर्नो॥

श्री॰भा॰ दत्तो ह्यपरीक्षितः॥ प्राप्तः सरस्वतीप्राचीं राजर्षी राजराट् तदा॥१२॥ इति श्रीभागवतरहस्ये प्रथमस्कंधे षो- ॥
र॰ प्र॰ डशोऽध्यायः॥१६॥ राम रामः ॥सूत उवाच॥ तत्र गोमिथुनं राजा हन्यमानं कलिना तथा॥ करदंडं वद·
११ हरूपेण दृष्ट्वा पप्रच्छ तं कलिम्॥१॥ राजोवाच॥ कोसि त्वं मम लोकेस्मिन्बलाद्धंस्यबलान्बली॥ कोसि त्वं वृष·
रूपेणैकपदैर्नूनः समाचरम्॥२॥ सर्वजीवान्मपशपालि सुखिनः धर्मत्वरटते॥ धर्मज्ञो कोन कर्तं त्वमो·
मत्तेह बलाद्दयम्॥३॥ दृष्ट्विवृत्तमपि मारोदीः त्वं वधिष्यामि दुःखदम्॥ को हन्यत्तव पादास्त्रीन्सोरभे
यवदस्व माम्॥४॥ दुःखदं तिये सम्योड्ः त्वतेभ्यो ददाम्यहम्॥ धर्म उवाच॥ युक्तमेतन्महाराज प्रश्नो यन्मा·
वदसि स्मृमिप॥५॥ येनस्युः स्त्रीशावी जानितं न जानाम्यहं प्रभो॥ केचिद्दैवं परे कर्म स्वभावमपरे विभुम्॥६
गज्ञा धर्मे प्रवदन्ति सुखं तत्पत्न्याषत॥ तपः शौचं दयासत्यं तव पादाः प्रकीर्तिताः॥७॥ अधर्मांशैस्त्रयो·
भग्नाः स्मयसंगमदैः किल॥ इदानीं सत्यपादं तेऽधर्मोयं च जिघृक्षति॥८॥ भूमिः कृष्णपदन्यासैस्त्यक्ताशो·
चति दीनवत्॥ भूमिधर्मौ सांत्वयित्वा कलये खड्गमाददे॥९॥ तजिघांसुमसिं प्रेत्य पापादेन्नृपतत्कलिः॥
पतितं पादयोर्दृष्ट्वा सन्ना प्राह हसन्निव॥१०॥ राजोवाच॥ नोत्तिष्ठ मम देशात्त्वं भयं तेन ददाम्यहम्॥ सूत उ·
वाच॥ राज्ञा तमः कलिस्त्रद्बद्धांजलिरभाषत॥११॥ स्थानं मे देहि राजेंद्र यत्राहं च वसामि भो॥ सूत उवाच॥
भूतं मद्यं स्त्रियो हिंसा स्थानानि कल्पयेद्दौ॥१२॥ सुवर्णमपि तद्यानं च मं कलिरग्रहीत्॥ संदधौ धर्मपादां·
स्त्रीन्महीं च समवर्द्धयत्॥१३॥ गजाह्वयेऽथ नास्ते स परीक्षिद्धर्मपालकः॥ इति श्रीभागवतरहस्ये प्रथमस्कं
धे सप्तदशोऽध्यायः॥१७॥ राम रामः ॥सूत उवाच॥ कृष्णस्यानुग्रहाद्राजा न मान्द्ररुद्रे मृतः॥१४॥ ब्रह्म·
कोपोत्थितास्त्रपीब्रह्मोहं प्राप्तवानसौ॥ सर्वं न्यस्य जहौ देहं गंगायां तत्र हरिं स्मरन्॥१५॥ यदा देहं जहौ राजा नाक·
लिस्त्वाव पद्यत॥ उपवर्णितमेतद्वः पुण्यं पारीक्षितं मया॥१६॥ ऋषय ऊचुः॥ राजा परीक्षितोऽवाप मनुक्षिं·
तावेनयेन वै॥ ततः पारीक्षितं सर्वमाख्याहि भवतारक॥१७॥ सूत उवाच॥ तस्यैव जन्मशुद्धिः स्मायन्नारा·

दा॥हतवांस्तत्र तीन्सर्वांस्तेजसा यस्य निर्जितः॥५॥स्थूलपाणिरदादस्त्रं तेनाग्न्युत्थितोस्म्यहम्॥कुरुसिं·
धुं यद्बलेन ततरेऽहं चदुस्तरम्॥६॥यद्दोष्मांनस्पृशंतिशत्रूणांशस्त्रकोटयः॥सोत्वेक्षतोमयायोवैविमल·
ब्धोनक्रोधवान्॥७॥जितोस्मि निर्बलैर्गोपैर्विनातेनयुधिष्ठिर॥सर्वंतेनविनाशून्यमभूत्स्मस्मृत्ततंयथा॥८
तयाष्टशाहतास्सर्वे चतुःपंचावशेषिताः॥वारुणीं मदिरां पीत्वा विदिक्षस्वचेष्टितम्॥९॥सूतउवाच॥
कृष्णंसंस्मरतोजिष्णोर्बुद्धिस्तु विमलाभवत्॥यदुसंस्थां कृष्णपादौ श्रुत्वा स्वर्गते मैच्छत्॥१०॥युधिष्ठिरः ए
थाश्रुत्य भक्त्या चोपरराम ह॥यस्मिन्काले गतः कृष्णः कलिस्तस्मिन्समागतः॥११॥कलिमागतमाला
यसयशौदिशामुत्तराम्॥विदुरोपिस्वयं देहं प्रभासेत्यक्तवांस्तदा॥१२॥द्रौपद्यपिस्वकं देहं तत्याजभक्ति
तः स्वयम्॥इति श्रीभागवतरहस्ये प्रथमस्कंधे पंचदशोऽध्यायः॥१५॥
सूतउवाच॥ततः परीक्षितो भूमिं शशास नरकन्यका॥१॥इरावतीचोपयेमे तस्यां पुत्राश्चजज्ञिरे॥जनमे
जयाद्याविप्रा अश्वमेधांस्तदा करोत्॥२॥कलेर्दिग्विजये राजा दत्तवान्दंडमोजसा॥शौनकउवाच॥दि
मथं दत्तवान्दंडं तस्मै गांयः पदाहनम्॥३॥सूतउवाच॥आत्मदेशे कलिं कृत्वा प्रविष्टं यत्नुरादरे॥स्वमा
कृत्य सेनाथोदिग्विजयाय निर्गतः॥४॥विजित्य देशान्भद्रादीन्सतेभ्यो बलिमाददे॥अथ कुटुरांतीय·
गोरुदतीमेकपादवान्॥५॥कच्चिद्वृषेनदुःखं ते तद्वं कं च न शोचसि॥मां मवपादेन तुं वा ऽसुरान्नृत्तह
तांस्तथा॥६॥किं वा स्त्रियाः कलिस्पृष्टाः किं स्मरसीश्वरचेष्टितम्॥भूमिरुवाच॥त्वं वेत्सि सर्वं यद्धर्म पृ·
च्छसि किं वदामि ते॥७॥सत्यादीनि च धर्मीणि ज्ञानकौशादिकानि च॥इमानि संति चान्यानि येन नारायण
नच॥तेनाहं रहितं लोकं शोचामि कलिनेक्षितम्॥त्वामात्मानं च शोचामि पितृन्देवान्ऋषीस्तथा॥९॥
स्वपेक्षिताया ब्रह्माद्यैर्लक्ष्मीः साकृष्णमाचरम्॥तस्यांघ्रयः शोभंती विष्णुजन्मांगतस्तदा॥१०॥रात्मान·
तोहित्वाभारंयोहरन्मे चदुःखदम्॥सहेतविरहं को स्य कृष्णस्य जगदात्मनः॥११॥एवं पृथ्वीधर्मयोरेवं व·

श्री·भा· गतो राजन्नथ नारदश्चागतः ॥ युधिष्ठिरस्तमभ्यर्च्य गतिं पित्रोरपृच्छत ॥ ८ ॥ नारद उवाच ॥ न जाने क्व ग- १
र· द्वि· तौ राजंस्त्वं वै कालवशं जगत् ॥ ९ ॥ तस्माज्जह्यंग वैक्लव्यमज्ञानकृतमात्मनः ॥ यावत्स त्वं कृतं ते न जी-
९ वानां जीवनं परम् ॥ १० ॥ धृतराष्ट्रः सभ्रात्रा दक्षिणे यो राजन्हिमालयम् ॥ त्वतादिक्र वैन्त्वर्धुन्यां सप्त्यास्ते वि-
गतेषणः ॥ ११ ॥ सचाद्यात्पंचमे राजन्नहनि स्वं कलेवरम् ॥ प्रहास्यति तत्पत्नी च तमन्वग्निं प्रवेक्ष्यति ॥ २
इति श्रीभागवतरहस्ये प्रथमस्कंधे त्रयोदशोऽध्यायः ॥ १३ ॥ सूत उवाच ॥ द्वारिकायां गते जिष्णौ ज्ञातुं
कृष्णविचेष्टितम् ॥ बहुकालो व्यतीयाय ततो पि नागतोऽर्जुनः ॥ १ ॥ युधिष्ठिरो ददर्शाथ सर्वकर्मविप-
र्ययम् ॥ छलप्रायं व्यवहृतं पापमिश्रं च सौहृदम् ॥ २ ॥ कष्टा विक्रयिणां तां सुतं पित्रोरपोषकम् ॥
युधिष्ठिर उवाच ॥ द्वारकायां गतो जिष्णुः सप्तमासैर्नचागतः ॥ ३ ॥ पश्योत्पातांश्छुभी मत्वमभद्रं किम-
भूदिह ॥ अंगाः स्फुरंति हृदये वेपथुश्च प्रजापते ॥ ४ ॥ शालाः कुर्वंति मां सव्यं दिशो धूम्राश्च चालभू-
श्चलेपि बहवो विप्राहृष्टा राज्ञा तदाब्रवीत् ॥ ५ ॥ मन्ये कृष्णपदैर्हीनां भूमिं सर्वाविकृत्स्नवान् ॥ इति चिंत-
यतो राज्ञस्त्वागमत्त च चार्जुनः ॥ ६ ॥ पादयोः पतितं दृष्ट्वा पृच्छति स्म युधिष्ठिरः ॥ युधिष्ठिर उवाच ॥ क-
च्चिदानर्तपुर्यां नः स्वजनाः सुखमासते ॥ ७ ॥ भगवानपि गोविंदः सुखमास्ते सुहृद्वृतः ॥ पद्मलेन्मो-
र्जिताः सर्वे क्रीडंति पदवोर्जिताः ॥ ८ ॥ कच्चित्तेनामयं तात भ्रष्टतेजाः कथं विभो ॥ कच्चिद्दत्तु वितं कर्मन-
कृतं मम वल्लभ ॥ ९ ॥ कच्चित्त्वेऽहतमेनाथमूल्यो सि तेन्यथानरुक ॥ इति श्रीभागवतरहस्ये प्रथमस्कंधे
चतुर्दशोऽध्यायः ॥ १४ ॥ सूत उवाच ॥ एवं कृष्णसखो भ्राता नानाशंसे विकल्पितः ॥ १ ॥ ध्यायन्कृष्णपदांभो-
जं नाशक्नोत्प्रतिभाषितुम् ॥ युधिष्ठिरं ततः प्राह कृष्णसख्यादिकं स्मरन् ॥ २ ॥ अर्जुन उवाच ॥ कृष्णेनाहं
वंचितोऽस्मि नाम्नि येन जगद्गते ॥ यत्तेजसाहं नाहल्पाशंदांत ववमन्मये ॥ ३ ॥ सभा मयकृता लब्धाः
हरन्नृपतयो बलिम् ॥ अहन्भीमो जरासंधं राज्ञस्त्वहृतवांस्तदा ॥ ४ ॥ तवस्त्रीकवरंस्पृष्टं पादयोः कितवैर्य-

यणं स्मरेत्॥यस्य पादजलं विश्वं पुनात्यन्यत् तमेनु किम्॥१८॥परीक्षिदेकदा विप्रान्मृगाननुगतो वने॥तृषा-
र्त्तो मुनिमासीनं ददर्शान्तसमीपगः॥१९॥तूष्णींस्थितं जटाछन्नं जलं तस्मादयाचत॥न दत्तं जलमानाद्वितेन
तस्मै तु कोपतः॥मृतं सर्पं मृषेः स्कंधे निधाय पुरमागतः॥शृंगी नाम सुतस्तस्य श्रुत्वा शपितरब्रवीत्॥२१॥राज्ञा
मयमर्यादा दृष्ट्वा योयेदासा ब्राह्मणैः कृताः॥सर्पो दंष्ट्रा निराजानं सप्तमे ऽह्नि चोदितः॥२२॥शप्त्वेदं पितरं वीक्ष्य रु-
रोद पितुरंतिके॥उन्मील्य नेत्रे स ऋषिः श्रुत्वा सुतविलापनम्॥२३॥विहृत्य सर्पं पप्रच्छ किमर्थं सुत रोदिषि॥
परीक्षिच्छापमाकर्ण्य पुत्रं निंदितवानृषिः॥२४॥मृते राज्ञि महोत्पाता भविष्यंत्यत्र पुत्रक॥इति श्रीभागवत-
रहस्ये प्रथमस्कंधेष्टादशोध्यायः॥१८॥सूत उवाच॥आत्मानं गर्हयामास कृत्वाघं स परीक्षितः॥पापस्य-
मे फलं सद्यो भवतु ब्रह्महेलनात्॥१॥श्रुत्वा सन्न्यागतं सर्पं स्वायुमेने परीक्षितः॥विहाय लोकौ द्वौ राजा गंगायां
प्राप तत्क्षणात्॥२॥व्रते सोनशनं चक्रे कृष्णस्मरणपूर्वकम्॥तत्रोपजग्मुर्ऋषयः पुनाना भुवनत्रयम्॥३॥व-
शिष्ठच्यवनादींश्च पूजयामास धर्मवित्॥तान्समेतान्स पप्रच्छ ह्यात्मकर्तव्यतां शुभां॥४॥राजोवाच॥अहोध-
न्यतमा लोके भवतां दर्शनाद्वयं॥शरणागतं मां जानंतु गंगा विप्राश्च धार्मिकाः॥५॥कृष्णोपि सहवीर्येषु गंगाकू-
लउदस्रुवः॥आसने प्रणम्य तान्विप्रान्दर्भेषु सुसमाहितः॥६॥तस्मिन्नेवं कृते राज्ञि नेदुर्दुंदुभयो दिवि॥ऊ-
चुस्तमृषयः सर्वे प्रशशंसुस्तस्य कर्मतत्॥७॥यत्कृष्णस्मरणं राजन्नेदं चित्रं भवत्कुले॥तदा वयं गमिष्यामो यदा
देहं त्यजिष्यसि॥८॥इति श्रुत्वा पुनः राजा ब्रह्मर्षीस्तानभाषत॥यत्कर्तव्यं मृत्युकाले तन्मे ब्रूत सुनिश्चितम्॥
तदागतः शुकस्तत्र तं दृष्ट्वा प्रणमत्यसौ॥देवाः प्रत्युत्थिताः सर्वे प्रणेमुः शिरसा तदा॥१०॥आसने ह्युपविष्टं
तं शुकं राजान्वपृच्छत॥म्रियमाणस्य जीवस्य किं कर्तव्यं वदस्व माम्॥११॥श्रवणं स्मरणं जप्यं ब्रूहि यद्वा वि-
र्यम्॥सूत उवाच॥एवमाभाषितः पृष्टः राजानं प्रत्यभाषत॥१२॥इति श्रीभागवतरहस्ये प्रथमस्कंधे एको-
नविंशोध्यायः॥१९॥इति श्रीभागवतरहस्ये प्रथमस्कंधः समाप्तः॥शुभम्॥राम॥ ॥ ॥ ॥राम॥ ॥

